# तारोपनिषत्

ॐ नमः शिवाय ।

अथ हैनां ब्रह्मरन्ध्रे तारिणीमाप्नोति ।
तारयीतीति तारा । तारा स्यादर्द्वपञ्चाक्षररूपा
ब्रह्मविष्णुमहेश्वरसदाशिवबिन्दुमेलनरूपा विद्या । तथा प्रथमं
भुवनामुच्चरेत् । व्योमज्वलनेन्दिराकलाबिन्दुमेलनरूपा । ततो
वधूमुच्चरेत् । षोडशहलतूर्यस्वरबिन्दुमेलनरूपा । ततः
कूर्चम् व्योमषष्ठस्वरबिन्दुमेलनरूपम् । नीलाख्या सरस्वती ।
इमामधीयानस्तर्कागमपुराणाकाव्यादिवागीश्वरो भवति । तारादिकास्त्रान्ता
चेत् तारा भवति । एतस्या ज्ञानमात्रेण जीवन्मुक्तो भवेद् वै ।
तामेत्य सर्वविद्याज्ञानवान् भवति ।

वारत्रयं यः पठेत् स सन्यासि शिव इव
सर्वदेवमयो भवति । ताररहिता पुनरेकजटा भवति ।
एतद्रूपामधीयाना समानफलदा । नात्र मित्रामित्रादिविचारणा ।
सिद्धविद्यानामासां फलं दक्षिणावत् । अथातो मन्त्रान्
जलसुद्धिक्षालनाचमनकराक्षतप्रक्षेप-
त्रिविधविघ्नोत्सारणभूम्यभिमन्त्रणं
जलाभ्युक्षणकुसुमशुद्धियन्त्रनिर्माणरूपानागमवादी लिखेत् ।
एकलिङ्गे पितृभूमौ चिरशून्यनिर्जने देवालये विजने चतुष्पथे
उज्जटे भूधरतटे निर्जने देशे निर्जन देवागरि श्रीफलमूले
विजने नदीतीरे चैत्यहट्टे वटाश्वत्थमूले स्वगृहे वा पूजा ।
पञ्चतत्वविधिना । अक्षोभ्यमुनिरस्यापि छन्दस्तु बृहती कूर्चं
बीजं शक्तिर्भुवना वधूः कीलकम् । एकजटा तारिणी वज्रोदकैकोग्रजटा
महाप्रतिसरा पिङ्गोग्रैकजटा आभिमुख्येन  षडङ्गानि इन्द्रनीलावर्णाभा
मूलमन्त्रभाञ्जि मूलाधारनाभिहृदयब्रह्मरनन्ध्रेषु भुवना
वधूकूर्चशोषणदहनप्रोत्सारणामृताकृतिमूर्तिर्जननीया तत्वविधिना ।
सजलप्रावृषेण्यघनराजिनिभाह्यष्टवर्षा पीनोन्नतवक्षोरुहा
नानाविधस्र्यलङ्कार विराजिता । सर्वा लम्बोदरी भीमा
व्याघृत्वगावृता महाचीनगुरुकपालपञ्चमुद्रा विराजिता
भीमदंष्ट्रा करालास्या पिङ्लोग्रैकजटा खड्गकर्तृदक्षिणकरयुगा
कपालोत्पलवामकारयुगा अक्षोभ्यमौलीन्दुप्रज्वलिता
पितृभूमिमध्यस्ठा ध्येया । चित्ततोष्णानन्तरं स्वयम् तारिणीति
आत्मभेदतया आत्मनि सन्तोष्य पूर्वमोंकारं तत आकारः
परे सुरेखे वज्ररेखे उत्तरे कूर्चं तदन्तास्त्रवह्निजाया ।
चतुरस्राष्टदलत्रिकोणरूपं यन्त्रम् । लक्ष्मी सरस्वती रतिः

प्रीतिः कीर्तिः तुष्टिः शान्तिः सदाशिवश्चात्र गमागमवशात्
पुष्पाञ्जलियोगमूलमन्त्ररूपपटलविहितकुसुमपरद्रव्यदानतर्पणम् ।
नैवेद्यभूतबलिदानादिमुख्यषडङ्गानि । गुरूनपि यथादेशम् ।
पूर्वादिदिशि गणेशवटुकक्षेत्रपालयोगिन्यः । आग्नेयादिषु
शङ्खपाण्डर तारकान् । त्रिकोणेषु बीजत्रयम् । दिशि
पद्मान्तकयमान्तकविघ्नान्तकनरान्तकान् । त्रिकोणेषु बीजत्रयम्
ब्राह्मी वैष्णवी माहेश्वरी शक्तित्रययुता यथायोग्यं वस्त्रालङ्कार
महाशङ्खमालया लक्ष नियमेनानियमेन वा सिद्धविद्यानाम्
देवज्ञानप्रकाशकानाम् संज्ञानसङ्कान् । कालिकाविहितानि कल्पानि कुर्यात् ।
अथ हैनं भगवन्तम् परमेष्ठिनं सनत्कुमारः पप्रच्छ येन
सर्वस्य सर्वं भवति तन्मन्त्रम् कथय भगवन् को हि मन्त्राणाम्
परमा मन्त्रदेवतानाञ्च दैवतम् किमुतास्य विद्यायुगशोधनं
पुत्रपौत्रकवित्वञ्च धनधान्यकवित्वञ्च निर्वाणमोक्षं च
लभते बुधः । केन विधिना आराध्यते केन मन्त्रेण सर्वमिति ।
अथाह भगवान् ब्रह्मा मन्त्राणां परमो मन्त्रस्तारेति परमा तारा सा
देवतानाञ्च देवता । सर्वदा स्त्रीषु मध्येषु जपेत् । स्त्रिया योनौ
सदा जपेत् । ऋतुमतीं गच्छेत् । तुलसीम् त्यजेत् । एवम् कृत्वा गुरुः
शिष्योऽयुतद्वयं निशायाम् एकाकी शून्यगृहे तिमिरालये ।
तदा सर्वस्य सर्वं तरति यशस्यन्ते नराः । ॐ ।

इति तारोपनिषत् समाप्ता ।

ॐ तारायै नमः ।